# BRIHAD-DHĀTURŪPĀVALI.

BY

**T. R. KRISHNĀCHĀRYA,**

PROPRIETOR,

**THE MADHVA VILĀSA BOOK DEPÔT,**

**KUMBAKONAM.**

Proofs corrected by

Pandit. SANKARASUBRAHMANYA SASTRI,

*Sanskrit Teacher.*

ST. JOSEPH'S HIGH SCHOOL,

**TRIVANDRUM.**

**Printed at the Bhāskara press,**

*Trivandrum.*

OCTOBER.

**1924.**

॥ श्रीः ॥

# बृहद्धातुरूपावलिः ।

कुम्भघोणस्थेन

मध्वविलास पुस्तकालयाधिपतिना

मल्लियम् रामाचार्यसूनुना

## टी. आर्. कृष्णाचार्येण

विरचिता ।

अनन्तशयनस्थ सेण्टजोसेफ पाठशालायाः

संस्कृतोपाध्यायैः

## पण्डित शङ्करसुब्रह्मण्यशास्त्रिभिः

शोधिता च ।

इदं पुस्तकम्

अनन्तशयनस्थे 'भास्कर' मुद्रणयन्त्रे

मुद्रितम् ।

शाके १८४३ रक्ताक्षिनाम्नि संवत्सरे

आश्विनमासे ।

# PREFACE.

I gladly accede to the request of Pandit T. R. Krishnacharya to write a preface to his new book, the Brihaddhāturūpāvali, mainly for two reasons. First, I cannot refuse the request of a man, who by his publishing activities, has done so much for the study of Sanskrit in general and of Madhva philosophy in particular. Secondly, I am convinced that the Brihaddhāturūpāvali is an exceedingly useful book and deserves all the support and encouragement that Sanskrit scholars can give it.

The name of Pandit T. R. Krishnacharya is well known in the world of Sanskrit scholars, not only in India but also in Europe and America. The Pandit comes of a poor but learned and respectable family. The business of a publisher, such as Pandit Krishnacharya has been, is not the work of a poor man and the story of how young Krishnacharya was led into it is interesting and shows the kind of stuff that he is made of. A follower of Sri Madhvacharya himself, Pandit Krishnacharya naturally desired to study the works of Madhva, but found that not one of them was available in a printed form. This struck him as being extremely deplorable and he formed the determination of publishing them all himself. Consequently not only did he publish all the works of Madhva under the title of Sarvamūla, but he also printed the works of Madhva's eminent followers, Jayatīrtha, Vyāsarājasvāmin, Rāghavendrasvāmin, Vādirājasvāmin and others, works which in a sense are more important than the works of the Master himself from the point of view of elaborate, scientific and systematic treatment of the Dvaita doctrine. The service that Krishnacharya thus did to the cause of the study of Madhva's philosophy can be understood when it is remembered that up to his days these works were studied only in Mss., which, besides being many a time inaccurate, were by no means accessible to all.

grammar. The Sanskrit Honours course is at present under reconstruction and I have sent a suggestion for constituting a separate paper for Vyakaraṇa. I am not, however, sure that the suggestion would be accepted.

A misconception regarding Vyākaraṇa is often found to be prevalent among scholars who have not studied the subject. They seem to think that the Vyākaraṇa Sāstra is constituted by a number of rules, perhaps very elaborate, of declension and conjugation and syntax and such other matters and naively wonder why a sāstra of this kind should traditionally be considered as requiring the study of twelve years and why some people should make it the study of even their whole life. This view is based upon a serious misconception regarding the scope of the Vyākaraṇa Sāstra. A man is never called a Vaiyākaraṇa if only he is able to decline a difficult word like 'kroṣṭu' or give off-hand the Aorist forms of even the most obscure roots. The Vyākaraṇa Sāstra, which forms the basis of Sanskrit scholarship, is not a matter of mere rules of this kind. Under it are treated some of the most important problems of the science of language and discussions of a highly philosophical kind, sometimes very subtle and abstruse, are carried on. It is this part of the Vyākaraṇa Sāstra which is so useful in mental training and development.

In conclusion I hope that this Brihaddhāturūpāvali will serve the purpose for which it is intended and with pleasure I introduce it to the Sanskrit public.

Elphinstone College,
Bombay,
22nd July 1924.

**A. B GAJENDRAGADKAR,**
[M. A., Ph. D., M. R. A. S.,]
Professor of Sanskrit.

# उपोद्घातः ।

श्रीवेङ्कटेशो विजयतेतराम् ।

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ॥

सुविदितमेवैतत्प्रेक्षावतां यन्मानसविचारप्रकटनं विना भाषां सुदुर्घटमत एव सकलोऽप्याबालगोपालं जनः स्वाभिलाषं विशुद्धया वाऽशुद्धया वा वाचोदीरयति । तत्र प्रभूतास्वपि भाषासु माधुर्यलाघवार्थगाम्भीर्याद्यनेकगुणगणमहिम्ना संस्कृतभाषैव प्राधान्यमवगाहत इति निवेदने निवेदकस्य मिथ्यास्तुतिकरणदोषो यत्सत्यं नैव भविष्यति । किंबहुना तद्भाषानाम्नैवेतरासामसंस्कृतत्वमस्या एव विशिष्टसंस्कारवत्त्वं स्फुटं विभाव्यते । सत्स्वपि तत्तद्भाषासंस्कारकेषु महत्सु व्याकरणादिशास्त्रेषु नैवापरा भाषाः संस्कृतपदभाजः किन्तु चिरंतनकालप्रवृत्ता सर्वासां भाषाणां जननीपदमध्यूषुषी देववाण्येव विशिष्टसंस्कारवत्त्वबोधकसंस्कृतपदवाच्या । अत एव **श्रीमद्भिरानन्दतीर्थभगवत्पादैः** 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतिव्याख्यानवेलायां मृत्तिकेति संस्कृतभाषास्थपदस्य सत्यत्वमुपादर्शि । तथाभूता चेयं भारती यद्यपीदानीं सार्वजनीनोपयोगाभावान्मृतभाषेति कैरपि व्यवह्रियते, तथापि नायं तस्या दोषः । न हि कापि भाषा म्रियते । किं तु तत्प्रचारकाणां कालमहिम्ना कारणान्तरेण वा क्षये सैव मृतेव लक्ष्यते । पुनश्च भागधेयोन्मुखतया लब्धे भक्तिशालिनि प्रवर्तके सैव निजोत्कृष्टगुणैराकृष्यत्येव चेतांसि सुदूरस्थायिनामपि विद्वदग्रेसराणाम् । इयं किं स्वान्तविचारं सौलभ्येन प्रकटयितुमसमर्थेति मृतेत्युच्यते ? महामान्याः ! पश्यतास्यामेव बहुभिः कुशाग्रमतिभिर्भिन्नभिन्नेषु विषयेषु प्रणीतान् ग्रन्थराशीन् । येनेयं मृतेति जल्पतां जिव्हैव पराङ्मुखत्वमापद्येत । एतद्भाषानिपुणा लौकिकेषु विषयेषु व्यवहर्तुमनया किमसमर्था इति मृतेयम् ? । तर्हि चक्षुषी उन्मील्य प्रेक्षध्वम् तत्र तत्र स्थितान् निजपाण्डित्यतेजसा तांस्तान्दिग्भागान् प्रकाशयतो विद्वदग्रेसरान् । येऽधुनापि सकलं स्वीयं व्यवहारमनयैव निर्वर्त्स्यन्ति । धर्मार्थकाममो-

क्षाणां संपादनमप्यनयैव सुकरम् । तत्र तावद्धर्मसंपादनं विनैतदभ्यसनं नैव शक्यमिति सुव्यक्तमेव । यतो मानवादीनि धर्मशास्त्राणि विद्यन्तेऽस्यामेव । अर्थस्तावदस्यामेव लिखितानां सुश्रुतप्रभृतीनां भैषज्यग्रन्थानां पठनेन क्रियाज्ञैर्भिषग्भिर्लभ्यते तदपि प्रत्यक्षमेव । कामस्तावद्वात्स्यायनादिप्रणीतानां ग्रन्थानामवलोकनतः सुसंपाद्य इति तस्याप्येतदधीनत्वं सुव्यक्तम् । एकोऽवशिष्टो मोक्षो हि विना संस्कृतभाषाध्ययनं सुदुर्घट इति कथनं नैव विशेषविवरणमर्हति । अतः पुरुषार्थचतुष्टयं निरायासेनैवाधीयानायत्तं कुर्वाणा भाषेयं सर्वादरास्पदमधिरूढेति नात्राश्चर्यलेशः ।

भाषानामैकाधिकसुप्तिङ्चयो वाक्यात्मा । तत्र वाक्येषु सुबन्तानां बाहुल्येन तत्पदज्ञानमेव प्रधानसंपादनतामर्हति । तथापि तेष्वपि सुबन्तेषु धातुजशब्दानामेवाधिक्यात् प्रथमतो धातुस्वरूपज्ञानं तदर्थज्ञानं तज्जशब्दज्ञानं च प्रथमसंपादनीयम् । तज्ज्ञानोपायभूतेषु सत्स्वपि धातुवृत्त्यादिषु बहुषु ग्रन्थेषु किमर्थमयं प्रयास इति न संशयितव्यम् । ते च महान्तः प्रबन्धाः सकलशास्त्रार्थघटिता निखिलसूत्रोपन्यासयुता महामतिशालिभिरेवाधिगन्तुमलम् । न तैः स्थूलमतीनां संस्कृतभाषामभ्यस्यतां बालानां वा कोप्युपयोगः । प्रत्युत तथाभूतकठिनग्रन्थतो रूपज्ञानप्रयतने तत्काठिन्यावलोकनतो वैरस्यमेव संजायेत तन्मनसीत्यवधार्य प्रयासोयमङ्गीकृतः श्रीमता कृष्णाचार्येणानेकविधपुस्तकचयमुद्रणावाप्तमहाश्लोकेन । स च प्रयासोऽध्येतॄणामिदानींतनानां कियन्तमुपकारभारमादधातीति प्रत्यक्षमेवाग्रिमग्रन्थमवलोकयतामतस्तद्विषये कृतं बहुना लेखनेन ।

स चायं कृष्णाचार्यः 'टोणपे' इत्युपाह्वः । तत्पूर्वजाश्च भरतखण्डे दक्षिणदेशे चोलमण्डले कावेर्या दक्षिणे तटे मायूरक्षेत्रस्य पश्चिमतोऽनतिदूरे तञ्जपुरमहाराजैर्महाराष्ट्रीयैर्निर्माप्य स्वाश्रितेभ्यो दत्ते मल्लिकावनाख्ये ग्रामे न्यवसन् । ते च तैरेव क्षितिपैः सह पुण्यपत्तनतो दक्षिणदिशमागतास्तानेव पारंपर्येण सेवमानाः श्रीमन्मध्वमतानुयायिन उत्तरादिमठशिष्या ऋक्शाखाध्यायिनो देशस्थाः । तद्वंश्यश्च षट्कर्माचरणतः क्षपितत्रिवि-

धमलः पौराणिको रामाचार्यस्तस्मिन्नेवाग्रहारीकृते ग्रामे पातिव्रत्यादिगुणैर्जनकनन्दिनीमनुकुर्वाणया सीताबाईसंज्ञिकया भार्यया सेव्यमानश्चिरमुवास। तयोश्च तादृशोर्महात्मनोर्मध्यमः पुत्रोऽयं ग्रन्थकारः कृष्णाभिधो बाल्य एव स्वजनकान्निजज्येष्ठभ्रातुः श्रीनिवासाचार्याच्चाधीतकाव्यः कलिकालमहिम्ना तद्ग्रामेऽलब्धजीविकोपायः शास्त्रमध्येतुं सुखेन च जीविकामधिगन्तुं पदवाक्यप्रमाणपारावारीणैर्बहुभिः पण्डितवरेण्यैरलंकृतं कुम्भघोणक्षेत्रमध्यवसत्। तत्र चारब्धशास्त्राध्ययनः शास्त्राभ्यसनयोग्य एव काले जाताल्पाभ्यसनः पित्रोर्भ्रात्रादीनां च पोषणार्थं द्रव्यसंपादन एव मतिमकार्षीत्। अहोमहिमाऽयमाकिञ्चन्यस्य। एतादृशाः सन्ति कियन्तो जना ये विधिनियोगतो दारिद्र्यपीडिता निजाध्ययनविमुखाः संजायन्ते। तत्र च दैववशात्कस्यामपि पाठशालायां लब्धोपाध्यायपदोऽवाप्तस्वास्थ्यो विना वेदान्ताभ्यसनमितरदध्ययनं विफलमित्याकलय्य **श्रीमदानन्दतीर्थभगवत्पादाचार्य**प्रणीतानां दशोपानिषद्भाष्यगीताभाष्यश्रीमद्ब्रह्मसूत्रभाष्यप्रभृतीनां द्वैतवेदान्तग्रन्थानां पठनमारब्धुकामः स्वगृहेऽलब्धतत्तत्पुस्तको ग्रन्थगोपनचणेभ्यो निजसतीर्थ्येभ्योऽप्यनवाप्तपुस्तकः कलकत्ता-मुम्बय्यादिदूरस्थलेष्वपि मुद्रितपुस्तकलाभार्थं कृतबहुपरिश्रमो यदा नालब्ध श्रीमन्मध्वमतीयमेकमपि मुद्रितं पुस्तकं, तदैवेतरमतपुस्तकानीव श्रीमन्मध्वमतपुस्तकानि मुद्रयित्वाऽपेक्षितृसकलजनसहजलभ्यानि विधास्य इति निरचैषीत्। प्रियपाठकाः! पुस्तकसंमुद्रणं तत्रापि संस्कृतपुस्तकमुद्रणं ग्राहकादीनां बहूनामनुपलम्भात्कथं दुष्करं तद्भवद्भिरनुमातुं शक्यं, तच्च महता धनिकेनैव सुसंपाद्यमित्यत्र न विशयलेशः। परमयमकिंचनाग्रेसरोऽसत्यपि शतरूप्यकाधिके धने पञ्चसहस्ररूपकमुद्रापणीयं **'श्रीमत्सर्वमूल'** नामकं श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतानां सप्तत्रिंशन्मूलग्रन्थानां संग्रहात्मकं ग्रन्थं मुद्रयितुमारब्धवान्। अहो! धैर्यमहिमाऽस्य मुद्रकस्य। यत्सत्यमधीरप्रकृतिभिरल्पधैर्यैर्वा विधातुमिदमत्यन्तमशक्यम्। मुद्रितपुस्तकानां सहजलभ्यत्वेऽयोग्या अपि पठेयुरतो निरमतास्मान्मुद्रणोद्यमादिति रुन्धानेष्वपि केषु चित्

पुस्तकस्वामिषु, महता यत्नेन तालपत्रलिखितानि पञ्चषाणि पुस्तकानि संपाद्य बहुभिः पण्डितैः संशोध्य वर्षद्वयेन समापयत तन्मुद्रणम् । ततः क्रमेण तद्व्याख्यानभूतान् न्यायसुधादीन्, न्यायामृततरङ्गिण्यादिकान् सुदुर्लभान् बादग्रन्थांश्च सहजलभ्यानकार्षीत् । तानि तु न केवलं भारतं वर्षं व्याप्नुवन् किंतु पाश्चात्यदेशेष्वपि पुस्तकागाराणि विद्वन्मन्दिराणि चाभुवत । किं बहुना ग्रन्थालयेषु महाराजप्रासादेषु विद्वदग्रेसरगृहेषु चेदानीं स्थितानि मुद्रितद्वैतमतपुस्तकानि श्रीमता कृष्णाचार्येणैव मुद्रितानि । यत्खलूपकृतं तत्रभवता जावजीमहाशयेन संस्कृतपुस्तकानां दुर्लभानां मुद्रणेन पण्डितवर्गोपरि, तथैव श्रीमन्मध्वमतानुयायिनामुपर्यपि कृष्णाचार्येणानेन । अत एव मनसि स्थितं तद्विषयकमादरं प्रचिकटयिषुणा मया प्रस्तावनालेखनोपक्रमोऽयमङ्गीकृतः । न केवलमेतावतैव परिसमाप्तोद्यमकथा मुद्रकस्यास्य । अनेन खलु दाक्षिणात्यपाठानुसारि समग्रं महाभारतं संमुद्य प्राकाशि । गणपतकृष्णाजिना मुद्रिते भारते लभ्यमाने कुतोऽयं प्रयासोऽङ्गीकृत इति यदा पृष्टो मादृशैस्तदा स एवाकथयन्महाभागः। ‘ यन्महाभारतावलोकनेच्छया गणपतकृष्णाजिमुद्रितं भारतमानीय यदैवादिपर्वावाचयं तदैव तस्मिन्पर्वणि बाल्ये पौराणिकानां मत्तातपादानां वदनतः श्रुताः पराशरस्य वसिष्ठाभ्यनुज्ञया उपरिचरवसुना प्रत्तायाः सत्यवत्याः पाणिग्रहणं, वेदव्यासस्योपनयनं, फाल्गुनस्य कपटयतिवेषधारणं, देवकीवसुदेवाभ्यां दत्तायाः सुभद्रायाः पाणिग्रहणमित्येवमाद्याः कथा यदा नाद्राक्षं तदैव तत्त्वबुभुत्सया तञ्जावरनगरं गत्वा तत्रत्ये **सरस्वतीमहाल्** संज्ञके तन्नगरराजानां संस्कृतपुस्तकागारे तैलंगाक्षरलिखितं, नागराक्षरलिखितं चेति पुस्तकद्वयं लब्धवानास्मि । तत्र च बाल्ये श्रुताः सकलाः कथा दृष्टा अतो मुम्बापुरमुद्रितं तत्रत्यं चेत्युभे अपि यदा दृष्टे पुस्तके तदा बहवो विसंवादा दृग्विषयं मेऽपतन् । अत औत्तराहदाक्षिणात्यभेदेन महाभारतं द्विविधपाठोपेतमिति ज्ञात्वा दाक्षिणात्यपाठानुसारि महाभारतमवश्यं मुद्रणीयमिति निरणैषमिति’ । तथैव महता प्रयासेन मूलपुस्तकानि संकलय्य बहूनां प-

ण्डितानां साहाय्येन पूर्णतामनयन्महाभारतपुस्तकमुद्रणमनेकपाठान्तरयुतम्। तद्वदेव श्रीमद्रामायणं वाल्मीकीयं गोविन्दराजीयेनापूर्वेण व्याख्यानेनालंकृतं नवानामन्यासां टीकानां सारं दत्त्वा मुद्रितम्। एतयोरस्माकं सर्वस्वीभूतयोर्महाग्रन्थयोर्मुद्रणेन न केवलं भरतखण्डं तद्यशसः पर्याप्तं किंतु द्वीपान्तरेष्वपि तत्परिश्रमफलभूतैरेतैर्ग्रन्थैस्तत्रत्यविदुषां मन्दिराणि व्याप्तानि। एवं स्वायुषो महान्तं भागं मध्वमतीयपुस्तकमुद्रणादिलोकोपयोगिकार्येऽतिवाह्य चरमे वयसि वयसोऽनुरूपं वेदान्तपरिशीलनं कुर्वाणस्य पूर्वमध्यापकपदमधितिष्ठतो यन्मनस्यासीद्यच्छात्रोपयोगिनी महती धातुरूपावलिः कार्येति तदेव पुनः स्मृतिपथमारूढमतः स एवेमं '**बृहद्धातुरूपावलिः**' इत्यभिधं ग्रन्थं कृत्वा प्रसिद्धिमानयत्। यद्यपि धातुरूपपरिज्ञानाय महामहिमशालिभिः डाक्टरपदवाच्यैः रामकृष्णशर्मभिर्भाण्डारकरमहोदयैः कृते द्वे पुस्तके अलं, तथा च साकल्येन तज्ज्ञानोपयोगाय धर्मराजनारायणगान्धिप्रभृतिभिर्ग्रथितानि नैकविधानि सन्ति पुस्तकानि, तथापि साकल्येन सकलरूपज्ञानं तैर्न भवति। तानि च पुरातनीं व्याकरणसरणिमनुसृत्यानिर्मितान्यत उभयविधसरण्युपेतेयमावलिर्धातुरूपाणां महत उपकाराय स्यादेवाङ्गलपाठशालायामप्यधीयानानामित्यत्र नास्ति मे संशयः। अत एवात्युपकारकं ग्रन्थमिमं क्रीत्वा सफलयेयुरतिमहतो ग्रन्थकृत्परिश्रमान् छात्रा विद्वांसश्च संस्कृतभाषाभिमानिनः। भगवांश्च ददातु ग्रन्थकर्तुरायुर्दीर्घं शतपरिमितं येन पुनर्मुद्रणादिकं मध्वमतग्रन्थानां तद्धस्तेन स्यादिति साञ्जलिबन्धं भगवन्तं लक्ष्मीजानिं वृषभगिरिवासिनं वेङ्कटेशं समभ्यर्थ्य विरमति।

विदुषामनुचरः

सातारानगरे ज्येष्ठवद्य-
पञ्चम्यां शाके १८४६
तमे शनिवासरे.

सेतुमाधवाचार्यः गजेन्द्रगडकरोपाह्वः,
(विद्यावाचस्पतिः व्याकरणनिष्णातः साताराराजकीयपाठशालायां गीर्वाणभाषाध्यापकः)

श्रीमद्धनुमद्भीममध्वांतर्गत रामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

ममैतद्ग्रन्थकरणे मुद्रणे च कारणकथनाय पुस्तकस्यादौ यन्मयालेख्यं तत्सर्वं ततोऽप्यधिकं च राजकीयपरिषद्दत्तविद्यावाचस्पतिलक्षणैः सकलशास्त्रप्रवीणानां गजेन्द्रगडकरोपाह्वानां साताराभिजनानां बाळाचार्याणां तनूजैः व्याकरणनिष्णातैः सेतुमाधवाचार्यैः संस्कृतभाषायां लिखिते उपोद्घाते, तथा तेषामेव बाळाचार्याणां तनयैः- एम्. ए. पीएच्. डी. इत्यादिबिरुदाङ्कितैः अश्वत्थामाचार्यैरङ्गलभाषायां लिखित उपोद्घाते च लिखितमेव वर्तते ।

अस्मिन्पुस्तके विद्यमाना विशेषास्त्वेते :—

(१) माधवीयधातुवृत्तौ विद्यमानानामुपद्विसहस्रधातूनां मध्ये आवश्यकतया मह्यं रुचिताः ६६२ धातोवोऽस्मिन्संगृहीताः ।

(२) धातुवृत्तेः क्रम एव प्रायोऽत्रानुसृतः ।

(३) एकैकस्यापि धातोरादौ प्रातिस्विकी क्रमिका संख्या वितीर्णास्ति । तया धातूनामन्वेषणे सौकर्यं भवति ।

(४) एकैकस्यापि धातोः प्रदर्शयितव्यानि कर्तरि दशलकाराणां सर्वाणि रूपाणि, कर्मणि भावे वा, णिजन्ते, सन्नन्ते, यङन्ते, यङ्लुगन्ते, कृदन्ते, उणाद्यन्ते च आवश्यकानि रूपाणि तत्रतत्र (भिन्नभिन्नस्थानेष्वन्वेषणप्रयासं विना) एकत्रैव प्रदर्शितानि । तत्रापि विकरणप्रत्ययार्हाणां चतुर्णां लकाराणां रूपाणि प्रथमं प्रदर्शितानि । ततो विकरणप्रत्ययानर्हाणां षण्णां लकाराणाम् ।

(५) कचित्केषांचिद्धातूनां मुख्यानि कतिपयानि रूपाणि विलिख्य ग्रन्थगौरवभिया 'शेषममुकधातुवत्' इत्यतिदेशस्तत्तद्धातुसंख्यानिर्देशपूर्वकं कृतः ।

(६) विशेषरूपाणां प्रक्रियाः पाणिनिसूत्रवार्तिकाद्युदाहरणपूर्वकमपुनरुक्तीकृत्य तत्रतत्र टिप्पनस्थाने मुद्रिताः । कठिनसूत्राणां लघु विवरणमपि कृतम् । सकृत्कृतविवरणस्य सूत्रस्य वार्तिकस्य वा पुनरुदा-

हरणे पूर्वं यत्र धातौ तद्विवरणं कृतं तत्स्थलप्रदर्शनाय तद्धातोः संख्या वितीर्णा क्वचित्पृष्ठसंख्या च दर्शिता । तत्र पृ० इति चिह्नं कृतम् ।

(७) धातुपाठस्थानां सर्वेषामपि धातूनां वर्णानुक्रमणिरूपो धातुकोशः पृथक्संयोजितः । तस्य प्रयोजनादिकं ३७७ तमे पृष्ठे द्रष्टव्यम् ।

(८) धातुघटकीभूतानामित्संज्ञकवर्णानां तथाविधानां "पुषादिः द्युतादिः" इत्यादीनां गणानां च प्रयोजनं सूत्रोपन्यासपूर्वकं धातुकोशपरिशिष्टे ९९३ तमे पृष्ठे मुद्रितम् ।

(९) अज्ञानमूलकतया, प्रमादमूलकतया, मुद्रणयन्त्रस्य देशान्तरस्थतया च समुत्पन्नानामशुद्धानां शुद्धिपत्रिका चान्ते मुद्रिता ।

---

## धन्यवादाः ।

(१) येषामनुग्रहबलादेतादृशे लोकोपकारके कार्ये प्रवृत्तोऽहं तेभ्यो मद्गुरुभ्यो नमः ।

(२) अनन्तशयनस्थ 'भास्कर' मुद्रणयन्त्रस्य कार्यनिर्वाहकैः रा. रा. श्री पद्मनाभय्यङ्गारैर्यथाकालं श्रद्धया कृते एतत्पुस्तकमुद्रणे नितरां कृतज्ञोऽहम् ।

(३) ब्रह्मश्री पण्डित शङ्करसुब्रह्मण्यशास्त्रिभिः मल्लिखित बृहद्धातुरूपावलिपुस्तकशोधनेन तत्पूर्वमुद्रण (प्रूफ) शोधनेन च बहूपकृतोऽहम् ।

(४) एतत्पुस्तकमुद्रणात्पूर्वं तच्छोधनाय मन्मित्रभूतान्वैयाकरणाग्रेसरान् म. शा. सं. कुमठानारायणाचार्यानन्वैषयम् । तदा तेषां स्थितिः कुत्रेति न ज्ञाता । ते तावत् गोकर्णमठाधिपतीनां सर्वतंत्रस्वतन्त्राणां, शिष्येभ्यः सद्विद्यादानतत्पराणां श्रीमदिन्दिराकान्त श्रीपादानां मठे आस्थानपण्डिततया वर्तन्ते इति मयैतत्पुस्तकमुद्रणानन्तरं ज्ञाताः । मत्प्रार्थितास्ते मुद्रिते पुस्तके स्थितान्यशुद्धानि प्रादर्शयन् तेन नितरामुपकृतोऽहं तत्प्रतिनिधितया तेभ्यो नमोवाकं प्रशासे ।

(९) मठीयकार्योपरामपूर्वकमेतत्पुस्तकशोधने म. शा. कुमठानारायणाचार्येभ्योऽवकाशं दत्तवतां पूर्वोक्तश्रीमदिन्दिराकान्तस्वामिनां तथा तथाविधानां तच्छिष्याणां श्रीकमलनाभश्रीपादानां चोपकृतिं सर्वदा स्मरामि कदापि न विस्मरेयम् ।

(१) एतत्पुस्तकस्योपोद्घातं संस्कृतभाषायां विलिखितवद्भ्यः सकलशास्त्रप्रवीणाणां सातारानगरस्थितानां गजेन्द्रगडकरोपाह्वानां बाळाचार्याणां तनूजन्मभ्यः राजकीयपरिषद्दत्त--विद्यावाचस्पतिलक्षणेभ्यः म. शा. सं. सेतुमाधवाचार्येभ्यः तथा अङ्गलभाषायामुपोद्घातं लिखितवद्भ्यः उपरि निर्दिष्ट -सेतुमाधवाचार्याणां सगर्भ्येभ्यः एम्. ए. पीएच्. डी. इत्यादि-चिरुदाङ्कितेभ्यः अश्वत्थामाचार्येभ्यश्चास्तु प्रणतिततिः ।

इति विदुषामकीतदासः

कुम्भघोणे — टोणपकरोपाह्वः मल्लियं–रामाचार्यतनूजः

१२--९--२४. — कृष्णाचार्यः

---

# OPINIONS.

From Raghuvara M. Shāstri, Esq., M. A, M. O. L. Shāstri, Vedāntatīrtha, Sāhityopādhyāya, etc. Senior Professor of Sanskrit, Rājarām College, KOLHAPUR. 6-3-24.

*My Dear Sir,*

I am highly grateful to receive the six parts of your Brihad-Dhātu-Rupāvali.

I can say without reserve that your book, so far, is of greatest help to a methodical student of the Dasagani portion of the Siddhāntha-Kaumudi, and is, at the same time, calculated to be of immense value as the best book of ready reference on that subject. The footnotes, too, are

lucid enough to fascilitate the work of a student of Pāṇini. You bear the credit of rendering a difficult task before an average student so easy.

*Yours very truly,*

**(Sd.) Raghuvara M. Sāstri.**

---

From, C. N. Ananta Rāmayyā Sāstri Esq., M. A., Professor of Dravidian Languages, His Highness The Maharaja's College, TRIVANDRUM. 20—3—1924.

---

सुगमः शब्द एतेषां रूपवानपि रूपवान् ।
रूपवान्धातुरपि चेत्खननं तत्र युज्यते ॥

Between the department of Sabdas and that of Dhātus the word-building in Sanskrit is complete. The latter is much more complex than the former no Indian and so far as I have ascertained no Europian language equalling it in its richness of verbal forms. Nay the latter department concerns itself with the former also to some extent, either proceeding the Sabda as in most instances, or on succeeding it as it does in several cases. The need of an elaborate treatise for the department of the roots and verbs was very much in evidence among students, teachers, and general readers of Sanskrit and you have most satisfactorily supplied the want. For philology and for research in that field, your book will remain a treasure. No other Indo-European or other language is so rich in synonyms which make it possible for Indian languages to write of extreme length. All Sanskrit and Malayalam libraries in colleges, schools and elsewhere should purchase more or less number of copies of this book. The indebtedness of Sanskrit schools in and outside India to their great Kumbakonam benefactor will last as long as this work and the world continue to exist Kumbakonam has unfortunately outdone the other towns in the audacity

of issuing malafide publications.—As the Tamil novels of an author ( of mischief ? ) But your works have removed the blot of bad authors in and outside Kumbakonam reminding one of the Sloka ending.

कुंभघोणे कृतं पापं कुंभघोणे विनश्यति ।

(Sd.) **C. N. A. Rāmyyā Sāstri.**

**

From S. K. Belvalkar, M. A. Ph. D., Professor of Sanskrit, Deccan College, Poona (India.)
Bilvakunja, Bhamburda, Poona, 24th March 1924.

---

Your "Brihad-Dhāturūpavali" is a very useful compilation, arranged on a logical and convenient plan, and fairly accurate as far as I have seen of it. The use of Pāniniya terminology is a distinct advantage; but perhaps a table at the end giving the current English equivalents for Pānini's technical terms would be quite welcome. Along with your "Brihad-Sabdaroopavali" the present work is calculated to become the two unfailing guides in the intricacies of Sanskrit Grammer.

(Sd.) **S. K. Belvalker.**

From Sripād Balavanta Tātke, Esq., M.A., Professor of Sanskrit, Jaswant College, JODHPUR. (MARWAR.) 23—4—1924.

---

Dear Sir,

I have carefully gone through most of the Brihad-dhāturupavali, your esteemed work on grammar, giving laboriously all the possible forms of the different moods and tenses of almost all the roots used or likely to be used by poets and writers in Sanskrit literature and more, and am very glad to note that it would be found extremely useful by students who wish, not only to pass their examinations from matriculation to M. A. of any of the

Indian Universities, but make a thorough study of the तिङन्तप्रकरण of the Koumudi in as it explains with lucidity the aphorisms concerned. Sanskrit, not being a current and spoken language in the strict sence of the term, requires a clear knowledge of grammar, especially of the nominal and the verbal forms and the latter condition can be more than sufficiently satisfied by its reader and writer if he, instead of trying to arrive at forms himself by the use of so many सूत्रs from the कौमुदी takes the help of your present book. Your Brihad-Dhaturupavali, in addition to the forms of roots in all the moods of every variety, gives the Kridanta forms as well and consequently holds a helping hand to those who aspire after deriving the different words. The alphebatical index inserted at the end saves one the worry of running over the pages in search of a particular root in that it points out to him the exact number before which it can be seen. I, therefore, by a survey of this book, feel no hesitation to state that it supersedes all its predecessors and forces me to recommend it to those for whom it is intended.

yours sincerely,

(Sd.) S. B. TĀTKE.

From Jadunāth Chakravarti, Esq., B. A. (Hon. Sans. Cal.)
Head Master, Gorakhpur High School, GORAKHPUR.

2—4—24.

Dear Sir,

With reference to your printed letter of the 1st March 1924, I have much pleasure in recording here my appreciation of your excellent publication Brihad-Dhāturoopavali which is no doubt an invaluable addition to Sanskrit book of reference.

The general get up of the book is also very good and attractive. So far as I have seen through the parts of the book, I have not come across any errors deserving

mention and I very safely recommend it to students and teachers of Sanskrit as a trust-worthy friend in the wide ocean of Sanskrit roots.

Yours faithfully,

(Sd) JADUNĀTH CHAKRAVARTI,

P, S. My Pandits note of appreciation is also sent herewith. (Sd) J. C.

---

From, S. Subba Rau, Esq , M. A. Principal, Sanskrit College Tirupathi, and Retired Superintendent of Sanskrit Schools of Madras. Tirupati, 18th April 1924.

---

I congratulate Mr. Pandit T. R. Krishnāchārya on his successful publication of the Brihad-Dhāturūpavali. I welcome it as the one true help to a student of sanskrit who intends learning the language on the liberal lines of modern culture. It may be pronounced as the best companion for a practical as well as comprehensive study of the sanskrit vocabulary so far as it is to be etymologically learnt and acquired. As far as I know there is no other publication of the kind in the field.

(Sd.) S. SUBBA RAU.

---

From Prasanna Kumār Āchārya, I. E. S., M. A. Ph.D., D. Lit., University Professor of Sanskrit and the Head of the Department of Sanskrit, Allahabad. 24—7—24.

---

I have gone through portions of Brihad dhāturūpavali by Pandit T. R. Krishnācharya printed at the Bhāskar Press, Trivandram. It appears to be on the lines of Mādhava's Dhatuvritti but deals with lessor number of roots and forms. Pandit Ācharya has shown a great skill in preparing the work. His explanations of the sūtras quoted from

the Pāṇini in the footnotes are very simple and elegant. The addition of the Dhātukosha in the alphabetical order at the end of the work together with accurate references to the serial number of roots conjugated in detail, has increased the utility of the work. For practical purposes it would be useful to the students and teachers of the modern schools and colleges. The printing and the get up of the work leave nothing to be desired.

(Sd) P. K. Acharya.

From Bhaskar R. ĀRTE, M. A. Senior Professor of Sanskrit, Baroda College. 8th Aug. 24.

---

To Pandit T. R. Krishnācharya, Kumbakonam.

Sir

I have gone through your Dhātu-rūpavali. It appears to me to be a very carefully prepared work. Students of sanskrit language who wish to study the Sanskrit verbal forms from Pāṇini will find your work a great help to them. I hope the sanskrit public will come to appreciate your great labour and scholarship.

Yours truly

(Sd) R. ARTE.

From, V.Anantācārya, Esq., Sanskrit Pandit, Pachaiappa's College, Madras. 30, Rāmanāik Street, Nungambakkam, Madras, 11th April 1924.

---

Sir,

I am extremely glad to have seen your book. The work is prepared in a new and excellent manner. All the roots of general use in Sanskrit are conjugated very clearly in all possible forms. I am glad to say that this book has laid the whole sanskrit students' population

under great obligation, and your considerable long experience in Sanskrit has been utilised in the preparation of this book. I am further of opinion that this work will be very useful to all students studying sanskrit grammar and I am sure that it will provide all students learning sanskrit in English or Sanskrit colleges with the necessary equipment for acquiring a fairly good acquaintance with subtle and difficult sāstraic points of sanskrit grammar. Because it is a self-instructing book, the students can learn much out of it by themselves and so diminish the labour of their instructors.

***

From K. R. Chakravarti Esq, Saralakavisūri. Vidyā-Bhūshana, (Mahāvidwān) Central College, BangaloreCity,
25th August 1924.

---

Sir,

I beg to acknowledge with thanks the six parts of your Dhāturūpavali, which you were pleased to send me some months back for my perusal. It exceedingly delighted me while I went through the contents of your entire piece of work (except the seventh part). A work of this type is very rare. It is an excellent guide and serves as a book of ready reference for all sanskrit reading public. The merits of this work have compelled me to write thus :

श्रीरस्तु

पण्डितकृष्णाचार्यैः तिङन्तरूपाख्यसागरं सम्यक् ।
निर्मथ्य सज्जनेभ्यः प्रत्ता सुबृहती सुधातुरूपालिः ॥ १ ॥
इयमिह तु धातुरूपं दर्शयति नकेवलं विशदम् ।
अपितु समये बुधानां स्वरूपमपि हन्त सर्वतो विशदम् ॥ ५ ॥
धातूनां विषमे पथि प्रतिपदं स्खालित्यभजां मुहुः
बालानां सुखनिर्गमाय सुमहत्साहाय्यमातन्वती ।
कृष्णाचार्यविनिर्मिता सुमहती धातुस्वरूपावलिः
चित्रं शाब्दिकधूर्वहस्य च गतिं स्ववश्यां समाकार्षति ॥ ३ ॥

सूत्रं पाणिनिनिर्मिमं प्रतिपदं रूपावगत्यै सुखात्
सर्वत्रापि पुटेष्वधो विलिखितं टीकासमेतं स्फुटम् ।
छात्राणां न कदापि कुत्र चिदपि स्यात्क्लेशलेशोप्यतः
सेयं सर्वजनादृता विजयतामासेतुशीताचलम् ॥ ४ ॥
सरलकविसूरिणैतद्राजास्थानीमहाविदुषा ।
विद्याभूषणेन प्रशस्तिपत्रं व्यलेखि कुतुकेन ॥ ५ ॥

(*Sd.*) *K. R. CHAKRAVARTY.*

From, Brahmasri Pandit Medippalli Venkataramanā Chārulu, Senior Sanskrit Pandit, Maharaja's English College, VIJAYANAGARAM. 6th March 1924.

---

Dear Sir,

I herewith send my opinion I formed upon your valuable book, Brihat-Dhāturoopavali. The book speaks for itself. I have gone through many pages of the book and I am very well impressed. I have shown it to the several Pandits of this place. All of them are of opinion that it is an execellent production of your pen.

I am yours sincerely,

(Sd.) ***Medappalli Venkata Ramanācharulu.***

From Sriyukt, Vyāsa Somanātha Sārma Sastri, Teacher Sri Tilak Vidyalaya, Hydrabad (Sind).

---

ओम् तत्सत् .

श्रीमन्तः पण्डितवर्याः ! विदाङ्कुर्वन्त्वेतत् .

यदियं बृहद्धातुरूपावलिः षड्भागपर्यन्तं मया समालोचिता । समालोचनानन्तरं स्वमन्तव्यमेतदर्थं प्रकाशयामि " यदियं बृहद्धातुरू-

बलिरध्येतॄणां कृतेऽत्युपयुक्ता तैः संग्राह्याच अध्यापकानांकृतेऽपि साहाय्यंस्यादिति " इति । श्रीमतां सर्वथास्तुत्यः प्रयासः ।

इतिशम् निवेदकः—

श्रावणशुक्लप्रतिपद्
संवत्सरो विक्रमीयः
१९८१ तमः

व्यासोपाह्वः सोमदत्तशर्मा शास्त्री

---

From Brahmasri Pandit, Ananthakrishna Nārāyana Sāstriar Avl, Senior Sanskrit Pandit, Zamorin's College, Calicut (Malabar) Chalapuram. 9—3—1924.

---

(1) धातुरूपावलिः साध्वी प्राज्ञानां हृदयंगमा ।
स्वीयसौभगमात्रेणानन्दयेन्निखिलाञ्जनान् ॥

(2) श्रीमत्कृष्णाचार्यसञ्चार्यमाणा
हृद्यस्वीयाकारविद्योतमाना ।
कं वा नैषा धातुरूपोपशोभि
न्याढ्यं मर्त्यं हर्षयेत्कामिनीव ॥

(3) आदौ वृद्धिमती जनान्प्रमदयन्त्याकारतो वर्णतो
मध्ये स्वाङ्गपरिक्षमादिव कृशा श्रीधातुरूपावलिः ।
एषा संकुचिता वपुर्विभवतो वृद्धेव सर्वाञ्जनान्
अन्ते बोधयतीव सर्वमवनावीदृग्भवेद्वस्त्विति ॥

(4) प्रकृतिरुचिरमूर्तिर्दर्शितस्वीयरूपा
विविधविकृतियुक्ता सूत्ररूपेण चादौ ।
विबुधकुलवतंसात् कृष्णमाचार्यमूलात्
कृतिरियमिह जीयाच्छ्रीशमायेवलोके ।

इति सप्रणयादरभारं सहृदयजनविधेयः ॥



(Sd.) अनन्तकृष्णनारायणशास्त्री.

From Brahmasri, V. Annappa Sastrilugaru, Vyakarana Siromani, Vyakarana Teacher, Chitrapur mutt, Shirali Karwar, Dt. Rekhana street, Parlakimidi, Ganjam Dt.

3—4—24

---

तत्रभवद्भिः पण्डित टी. आर कृष्णाचार्यैर्विरचिता बृहद्धातुरूपावलिरामूलाग्रमालोक्यत । आवश्यकानां धातुरूपाणामवबोधनाय सुगमशैलीनिबद्धः समर्हो ग्रन्थोऽयमेकएवेति, एतादृशस्य कस्याप्यलाभेन नितरां दूयमानः संस्कृतच्छात्रलोकोऽनेनपरमां तृप्तिमेष्यतीतिच सुदृढं विश्वसिमि ।

राजकीयप्रवेशपरीक्षार्थं निर्णीतेष्वन्यतमस्य अनिर्दिष्टग्रन्थविशेषस्य प्राथमिकव्याकरणस्य (Elementary Grammar) स्थानमाक्रमितुं बृहच्छब्दरूपावलीद्वितीयोऽयमेक एव ग्रन्थः समर्ह इत्यामूलाग्रमेतद्दर्शिनः प्राथमिकव्याकरणप्रश्नपरिचयवन्तः प्रतीयुरित्यभिप्रैमि ।

(Sd.) वासा अन्नप्पशास्त्री.

---

From Panditjee Somanath Sadasiv Vadikar, Sanskrit Pandit, Victoria College, Gwaliar.

---

लष्करपत्तने विक्रमसंवत् १९८१ चैत्रकृष्णैकादश्याम् ।

विद्वद्वर्याः श्रीयुत कृष्णाचार्याः ! श्रीमद्भिः कृपया प्रहितान् बृहद्धातुरूपावल्याः षड् भागानलभे। काले काले पठनपाठनसमये तानुपयुञ्ज च । अतीवोपयुक्तमेतत्पुस्तकं विनिर्माय भवद्भिर्नकेवलमध्येतारः किन्त्वध्यापयितारोपि भृशमुपकृता इति मे मतम् ।

(Sd) सोमनाथः

---

From, Sriyukta H. P. Nandakumar Sukla,
Pandit High School, Gorokhpur U. P.

---

मान्यमहाशय ! प्रणामाः ।

आपने इसग्रन्थको विरचितकरके अनने आधुनिक संस्कृतप्रेमियो-

का बहुत उपकारकिया । इससे आपको धन्यवादहै ।

ग्रन्थ अतीव प्रशस्यहै । प्रायःशुद्ध छापाभी गयाहै । कहींकहीं छापनेमे अशुद्धि होगईहै । और आपने संक्षेप कुच्छ करदियाहै ।

धन्यवाद ।

(Sd. हे प. नन्दकुमारशुक्ल)

## बृहद्धातुरूपावल्याः विषयानुक्रमणिका ।




From Title page up to this Page,
Printed at
**Sri Gopala Vilasa Press,**
**KUMBAKONAM.**

श्रीगणेशाय नमः ।

श्रीसरस्वत्यै नमः ।

श्रीलक्ष्मीनारायणाभ्यां नमः ।

# अथ बृहद्धातुरूपावलिः ।

## [पूर्वपीठिका ।]

**भूवादयो धातवः ।** क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः । धातवो दशगणतया विभज्यन्ते । ते च—(१) भ्वादयः शब्विकरणाः । (२) अदादयो लुग्विकरणाः । (३) जुहोत्यादयः श्लुविकरणाः । (४) दिवादयः श्यन्विकरणाः । (५) स्वादयः श्नुविकरणाः । (६) तुदादयः शविकरणाः । (७) रुधादयः श्नम्विकरणाः । (८) तनादय उविकरणाः । (९) क्र्यादयः श्नाविकरणाः । (१०) चुरादयः स्वार्थिकणिज्विकरणाः । इति ॥

प्रायः सर्वेभ्यो धातुभ्यो दश लकारा भवन्ति । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । इति दश लकाराः । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः । अतोऽत्र स न प्रदर्श्यते । विध्याशीर्भेदेन लिङ् द्विविधः । तथाच लोकेऽपि दश लकाराः ।

**लः कर्मणि च भावे चाकर्मकेभ्यः ।** लकाराः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च स्युः । अकर्मकेभ्यो भावे कर्तरि च । लडा-

दीनां लकारा इति प्राचां संज्ञाः। ताभिरिहापि व्यवहारः। **तिप्तस्झि-सिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्।** एतेऽष्टादश लादेशाः स्युः। एतेषां '**तिङ्**' इति प्रत्याहारलब्धा संज्ञा।

**तङानावात्मनेपदम्।** तङ्प्रत्याहारभूताः त आतां झ। थास् आथाम् ध्वम्। इट् वहि महिङ्। इति द्वितीयास्त्रयस्त्रिका लादेशाः प्रत्ययाः, शानच्कानचौ च आत्मनेपदसंज्ञाः स्युः। **लः परस्मैपदम्।** आत्मनेपदभिन्नाः तिप् तस् झि। सिप् थस् थ। मिप् वस् मस्। इति प्रथमे त्रयस्त्रिका लादेशाः परस्मैपदसंज्ञाः स्युः।

**अनुदात्तङित आत्मनेपदम्।** अनुदात्तेत उपदेशे यो ङित् तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदप्रत्ययाः स्युः। '**एधु=वृद्धौ**' अनुदात्तेत्। 'डीङ्=विहायसा गतौ' ङित्। **स्वरितञितः कर्त्रभिप्राये क्रियाफले।** स्वरितेतो ञितश्च धातोरात्मनेपदप्रत्ययाः स्युः क्रियाफले कर्तृगामिनि सति। अन्यगामिनि तु परस्मैपदप्रत्यया इत्यर्थः। '**पचष्=**पाके' स्वरितेत्। 'वेञ् तन्तुसन्ताने' ञित्। इत्यादय उभयपदिनः। **शेषात्कर्तरि परस्मैपदम्।** आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात्।

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः।** तिङ उभयोः पदयोः त्रयस्त्रिकाः क्रमात् प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषसंज्ञाः स्युः। **तान्येकवचनद्विवचनबहुवचनान्येकशः।** लब्धप्रथमपुरुषादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः। **युष्मद्युपपदे समा-**

---

१. "यष्टा यजते" इत्यत्र यागफलस्य स्वर्गस्य कर्तृगामित्वादात्मनेपदम्।
२. "होता याज्यया यजति" त्यत्र फलस्य यजमानगामित्वेन परस्मैपदम्। एवं "देवदत्तः पचते" "सूदः पचति" इत्यत्रापि द्रष्टव्यम्।

**नाधिकरणे स्थानिन्यपि मध्यमः** । तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमपुरुषः स्यात् । त्वं भवसि । भवसि इत्येव वा । **अस्मद्युत्तमः** । तथाभूतेऽस्मदि उत्तमपुरुषः स्यात् । अहं भवामि । भवामि इत्येव वा । **शेषे प्रथमः** । मध्यमोत्तमयोरविषये प्रथमपुरुषः स्यात् । स भवति । केवलं भवति इति वा ।

**तिङ्शित्सार्वधातुकम्** । तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः । **कर्तरि शप्** । कर्त्रर्थे सार्वधातुके प्रत्यये परे धातुभ्यः शप् स्यात् । शपावितौ । 'अ' मात्रं शिष्यते ।

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्** । यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात् । भवामि भविष्यामि इत्यादौ केवलो धातुः, विकरणप्रत्ययविशिष्टा 'भव' इत्यादयश्च अङ्गसंज्ञाः स्युः । **सार्वधातुकार्धधातुकयोः** । अनयोः परयोः इगन्ताङ्गस्य गुणः स्यात् । **'नी'**=नयति[1] । नेष्यति[2] । **आर्धधातुकं शेषः** । तिङ्शिद्भ्योऽन्यः धातोरिति विहितः प्रत्ययः आर्धधातुकसंज्ञः स्यात् । **पुगन्तलघूपधस्य च** । पुगन्तस्य[3] लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः । **'बुध्'** बोधति[4] । बोधिष्यति । **अलोन्त्यात्पूर्व उपधा** । अन्त्याद्वर्णात्पूर्वो वर्णः उपधासंज्ञः स्यात् । **'बुध्'** इत्यत्र उकार उपधा ।

अत्र प्रथमं विकरणप्रत्ययार्हाश्चत्वारो लकाराः, ततस्तदनर्हा षट् इत्येवं क्रमेण दश लकाराः कथ्यन्ते ।

---

१. सार्वधातुके शपि परे इगन्ताङ्गगुणस्योदाहरणम् । २. आर्धधातुके 'स्य' प्रत्यये परे इगन्ताङ्गगुणस्योदाहरणम् । ३. **अर्तिह्रीव्लीरी**—त्यादिना विधीयमानः 'पुक्' । ४. लघूपधगुणस्योदाहरणम् ।

## परस्मैपदे—

### १. लटः परिनिष्ठिताः प्रत्ययाः ।

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमपुरुषे | ति (तिप्^२) | तस् | अन्ति (झि)^३ |
| मध्यमपुरुषे | सि (सिप्) | थस् | थ |
| उत्तमपुरुषे | मि (मिप्) | वस् | मस् |

### २. लोटः^४ प्रत्ययाः—

प्र० तु^५—तात्^६ । ताम्^७ । अन्तु ॥ म० हि^८—तात् । तम् । त ॥

---

१. **वर्तमाने लट्** । वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । २. तिप् सिप् मिप् इत्येते त्रय: प्रत्ययाः पित: । तत्फलं तु द्वेष्टि द्वेक्षि द्वेष्मि द्वेष्टु इत्यादौ गुणः । ३. **झोन्तः** । प्रत्ययावयवस्य झस्य 'अन्त' इत्यादेश: स्यात् ।

४. **लोट् च** । विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनारूपेष्वर्थेषु वाच्येषु द्योत्येषु वा लोट् स्यात् । **विधिः**=भृत्यादे: कार्येषु प्रवर्तनम् । **निमन्त्रणम्**=आवश्यके श्राद्धभोजनादौ दौहित्रादे: प्रवर्तनम् । **आमन्त्रणम्**=यथेच्छं क्रियतामित्यभ्यनुज्ञानम् । **अधीष्ट:**=सत्कारपूर्वको व्यापार: । **सम्प्रश्न:**=इदं कार्यं न वा ? इति विचार्य निर्धारणम् । **प्रार्थनम्**=याच्ञा । ५ **एरु:** । लोट इकारस्य उ: स्यात् । ६. **तुह्योस्तातङाशिष्यन्यतरस्याम्** । आशिषि तुह्योस्तातङ् वा स्यात् । **आशिषि लिङ्लोटौ** । एतौ आशिष्यपि भवत: । ७ **लोटो लङ्वत्** । लोटो लङ इव कार्यं स्यात् । **तस्थस्थमिपां तां तं तामः** । ङितो लकारस्य आदेशभूतानां तस् थस् थ मि इत्येतेषां चतुर्णां ताम् तम् त अम् इत्यादेशा: स्यु: । लङ् लिङ् लुङ् लृङ् एते ङितो लकारा: । ८. **सेर्ह्यपिच्च** । लोटः सेः हि: स्यात् । स: अपिच्च भवति । अपित्फलं तु—**सार्वधातुकमपित्** । अपित्सार्वधातुकं ङिद्वत्स्यात् । **क्ङिति च** । गित्किन्ङिन्निमित्तेग्लक्षणे गुणवृद्धी न स्तः । इति स्तुहि इत्यादौ गुणनिषेधः ।

उ० औनि । आव । आम ॥

३. लँङः प्रत्ययाः—

प्र० तुँ । ताम् । अन् ॥ म० स् । तम् । त ॥ उ० म् । व । म ॥

४. विधिलिँङः प्रत्ययाः—

प्र० यात् । याताम् । युँस् ॥ म० यास् । यातम् । यात ॥
उ० याम् । याव । याम ।

५. लिँटः प्रत्ययाः—

---

१ **मेर्निः** । लोटो मेः निः स्यात् । **आडुत्तमस्य पिच्च** । लोटः उत्तमपुरुषप्रत्ययानां आडागमः स्यात् । सः पिच्च भवति । पित्त्वफलं तु—द्वेषाणि द्वेषाव द्वेषाम इत्यत्र गुणः ।

२. **अनद्यतने लङ्** । अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् । अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन च सहितो दिवसः अद्यतनः । तद्भिन्नोऽनद्यतनः । ३. **इतश्च** । ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात् । 'ति' इत्यत्र अन्तस्य इकारस्य लोपे 'त्' इति भवति ।

४. **विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्** । विध्यादिष्वर्थेषु लिङ् स्यात् । ५. **यासुट् परस्मैपदेषूदात्तो ङिच्च** । लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च । 'ति' इत्यस्य यासुडागमे यास् ति इति भवति । **सुट् तिथोः** । लिङस्तकारसकारयोः सुट् स्यात् । तथा च यास् स् ति इति भवति । **लिङः सलोपोऽनन्त्यस्य** । सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति सकारद्वयस्यापि निवृत्तौ या ति इति भवति । ततः **इतश्च** । इति इकारलोपे 'यात्' इति भवति । ६. यास्+झि इति स्थिते सलोपे । या+झि इति स्थिते **झेर्जुस्** । लिङो झेर्जुस् स्यात्, या+उस् इति जाते **उस्यपदान्तात्** । अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । इति 'आ' इत्यस्य पररूपे युस् इति भवति ।

७. **परोक्षे लिट्** । भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । प्रयोक्तुरिन्द्रियागोचरत्वं परोक्षत्वम् । **लिट् च** । लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः ।

प्र० अ (णल्)। अतुस्। उस्॥ म० थ (थल्)। अथुस्। अ॥
उ० अ (णल्)। व। म॥

---

१. **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः**। लिटस्तिबादीनां नवानां णल् अतुस् उस्। थल् अथुस् अ। णल् व म इति नव आदेशाः स्युः। २ **आर्धधातुकस्येड्वलादेः**। वलादेरार्धधातुकस्य इडागमः स्यात्। थ व म स्य प्रभृतीनां प्रत्ययानां वलादित्वादिडागमे। इथ इव इम इस्य इत्यादयो भवन्ति। एतच्च सेड्धातुभ्य एव। **एकाच उपदेशेऽनुदात्तात्**। उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्य इण्न स्यात्।

## सेडनिटोः संग्रहः।

ऊदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः॥ १॥

ऊकारान्तान् ॠकारान्तान् यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रिञ् वृङ् वृञ् इत्येतांश्च विना अन्ये अजन्ता धातवः निहताः=अनुदात्ताः। तस्मात्ते अनिटः। ऊकारान्ताः ॠकारान्ताः युप्रभृतिवृञन्ताश्च धातव उदात्ताः। तस्मात्ते सेटः।

## हलन्तेषु अनुदात्तानाह।

शक्लृ-पच्-मुचि-रिच्-वच्-विच्-सिच्-प्रच्छि-त्यज्-निजिर्-भजः।
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्-रञ्ज्-विजिर् स्वञ्जि-सञ्ज्-सृजः॥ २॥

अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः-पद्य-भिद्-विद्यतिर्-विनद्।
शद्-सदी स्विद्यतिः-स्कन्दि-हदी-क्रुध्-क्षुधि-बुद्ध्यती॥ ३॥

बन्धिर्-युधि-रुधी-राधि-व्यध्-शुधः-साधि-सिद्ध्यती।
मन्य हन्नाप्-क्षिप्-छुपि-तप्-तिप-स्तृप्यति-दृप्यती॥ ४॥

लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यभ्-रभ्-लभ्-गम्-नम्-यमो-रमिः।
क्रुशि-दंशि-दिशी-दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशः-कृषिः॥ ५॥

त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो-घसिः।
वसति-दह्-दिहि-दुहो-नह्-मिह्-रुह्-लिह्-वहिस्तथा॥ ६॥

लिटि प्रत्ययाङ्गपरिष्करणं तिसृभिः विधाभिः संभवति। **तत्र प्रथमा**–धातोः

---

अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥
(एतद्व्यधिकशतादन्ये हलन्ता धातवः सेटः)

**अनिड्धातुष्वपि कश्चिद्विशेषमाह—**

**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** । एभ्यो लिट इण्न स्यत् । क्रादीनां चतुर्णां ग्रहणं नियमार्थम् । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव । नान्येभ्यः । स्तुद्रुस्रुश्रुवां ग्रहणं थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् । **अचस्तास्वत्थल्यनिटो नित्यम्** । उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् ।

**उपदेशेऽत्वतः** । उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् । **ऋतो भारद्वाजस्य** । तासौ नित्यानिटः ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन । तेन अन्यस्य स्यादेव । अयमत्र संग्रहः—

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

१. गद्+णल् इति स्थिते—**लिटि धातोरनभ्यासस्य** । लिटि अभ्यासभिन्नस्य धात्ववयवस्य प्रथमस्य एकाचः द्वे स्तः । आदिभूतादचः परस्य तु द्वितीयस्य । गद् गद् अ इति भवति । **पूर्वोऽभ्यासः** । अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् । अनेन प्रथमस्य 'गद्' इत्यस्य 'अभ्यास' इति संज्ञा । **हलादिः शेषः** । अभ्यासस्य आदिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । ग गद् अ इति भवति । **शर्पूर्वाः खयः** । अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते । **'हलादिः शेष'** इत्यस्यापवादः । स्पर्ध्=स्पर्ध् स्पर्ध्=पस्पर्ध् । **अभ्यासे चर्च** । अभ्यासे झलां चरः स्युः जशश्च । झशां जशः, खयां चर इत्यादिविवेक आन्तरतम्यात् । भण् भण्=बभण् । **कुहोश्चुः** । अभ्यासस्थकवर्गहकारयोश्चवर्गादेशः स्यात् । ग गद्=जगद् । हस् हस्=ह हस्=जहस् । **ह्रस्वः** । अभ्यासस्याचो ह्रस्वः स्यात् । कूज् कूज्=कू कूज्=कु कूज्=चुकूज्+अ=चुकूज । **एच इग्घ्रस्वादेशे** । आदिश्यमानेषु ह्रस्वेषु मध्ये एचः इगेव स्यात् । वेष्ट्=वेष्ट् वेष्ट्=वे वेष्ट्=विवेष्ट्+ए=विवेष्टे । **अत उपधायाः** । उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे ।

द्विर्वचनेन। **द्वितीया**—एत्वाभ्यासलोपाभ्याम्। **तृतीया**—आम्प्रत्ययकृभ्वस्त्यनुप्रयोगाभ्याम्।

---

जगद्+(णल्) अ इत्यत्र णलो णित्वात् उपधाभूतस्य गकारोत्तराकारस्य वृद्धौ 'जगाद' इति रूपम्। **णलुत्तमो वा**। उत्तमपुरुषैकवचनः णल् प्रत्ययो वा णित्स्यात्। जगाद-जगद। **अत आदेः**। अभ्यासस्य आदेरतो दीर्घः स्यात्। अत्+अ इति स्थिते अत् अत्=अ अत्=आ अत्=सवर्णदीर्घे आत्+अ=आत। **तस्मान्नुड्द्विहलः**। द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात्। अर्द्=अर्द् अर्द्=अ अर्द्=आ अर्द्=आ न् अर्द्+अ=आनर्द।

## २. लिटि द्वितीया विधा।

**अत एकहल्मध्येऽनादेशादेर्लिटि**। लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य असंयुक्तहल्मध्यस्थस्य अकारस्य एकारः स्यात् अभ्यासलोपश्च किति लिटि। **असंयोगाल्लिट् कित्**। असंयोगात्परोऽपिल्लिट् कित् स्यात्। नद्=नेदतुः। नेदुः। ननाद इत्यत्र तिबादेशस्य णलः पित्वात् कित्वाभावात् एत्वाभ्यासलोपौ न स्तः। **थलि च सेटि**। सिबादेशथलः पित्वेऽपि एत्वाभ्यासलोपौ भवतः। नेदिथ। लिण्निमित्तादेशादित्वात् चकणतुः इत्यत्र एत्वाभ्यासलोपौ न स्तः। ततर्दतुरित्यत्र संयुक्तहल्मध्यस्थत्वादकारस्य एत्वाभ्यासलोपौ न। आत्मनेपदे लिटि सर्वेषामपि प्रत्ययानामपित्त्वात्सर्वत्र एत्वाभ्यासलोपौ। देधे। देधाते। देधिरे।

## ३. लिटि तृतीया विधा।

**कास्प्रत्ययादाममन्त्रे लिटि**। 'कास्' धातोः अनेकाच्कधातोश्च आम् स्याल्लिटि। **इजादेश्च गुरुमतोऽनृच्छः**। इजादिर्यो धातुर्गुरुमान् ऋच्छत्यन्यः तत आम् स्याल्लिटि। **दयायासश्च**। दय् अय् आस् एभ्यः आम् स्याल्लिटि। उक्ष्+णल् इति स्थिते उक्ष् आम् अ इति भवति। **कृञ्चानुप्रयुज्यते लिटि**। आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। उक्ष् आम् कृ अ इति भवति। अत्र अनुप्रयुज्यमानात् कृधातोर्लिटि परे द्वित्वादिकं भवति। **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य**। आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात्। प्रकृते आम्प्रकृतिकस्य उक्षधातोः परस्मैपदित्वात् कृञोऽपि परस्मैपदमेव भवति। कृधातोर्द्वित्वे कृ कृ। **उरत्**। अभ्यासऋवर्णस्य अत् स्यात् प्रत्यये परे। क कृ। **कुहोश्चुः** (पृ० ७)रिति चुत्वम्। च कृ। उपधावृद्धिः। चकार्+अ=चकार। उक्षाम्+चकार=उक्षाञ्चकार। एवं उक्षांबभूव। उक्षामास। अनुप्रयोगसामर्थ्यात् अस्तेर्भूभावो न। णिजन्ताः सन्नन्ताः यङन्ताः इत्यादयः अनेकाच्का धातवः।

**६. लुट[1]ः प्रत्ययाः—**

प्र० ता[2] । तारौ[3] । तारः ॥ म० तासि[4] । तास्थः । तास्थ ॥

उ० तास्मि । तास्वः । तास्मः ॥

**७. लृट[5]ः प्रत्ययाः—**

प्र० स्यति[6] । स्यतः । स्यन्ति ॥ म० स्यसि । स्यथः स्यथ ॥

उ० स्यामि[7] । स्यावः । स्यामः ॥

**८. आशीर्लिङ[8]ः प्रत्ययाः —**

प्र० यात्[9] । यास्ताम्[10] । यासुः ॥ म० यास् । यास्तम् । यास्त ॥

उ० यासम् । यास्व । यास्म ॥

---

१. **अनद्यतने लुट्** । भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् । २. **स्यतासी लृलुटोः** । धातोः लृङ् लृटोः परतः 'स्य' प्रत्ययः स्यात् । लुटि परतः 'तास्' प्रत्ययः स्यात् । जि(=जये) + लुडादेशतिप्रत्यये गुणे च, जे + तास् + ति इति भवति । **लुटः प्रथमस्य डारौरसः** । लुटः प्रथमपुरुषप्रत्ययानां ति तस् अन्ति इति त्रयाणां डा रौ रस् इति त्रय आदेशाः क्रमात्स्युः । जे तास् डा इति जाते, डादेशस्य डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । तास् इत्यत्र टिभूतस्य 'आस्' इत्यस्य लोपे जे त् + आ = जेता इति भवति । ३. तास् + रौ इति स्थिते **रि च** । तासेरस्तेश्च लोपः स्यात् रादौ प्रत्यये परे । इति 'स्' इत्यस्य लोपे तारौ इति भवति । ४. **तासस्त्योर्लोपः** । तासेरस्तेश्च लोपः स्यात् सादौ प्रत्यये परे । ५ **लृट् शेषे च** । भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां च । ६. **स्यतासी लृलुटोः** (पृ० ९) इति 'स्य' प्रत्ययः । ७. स्य + मि इत्यत्र **अतो दीर्घो यञि** । अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे । इति दीर्घे 'स्यामि' इत्यादि । ८ **आशिषि लिङ्लोटौ** (पृ० ४) । ९. विधिलिङि उक्त **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पृ० ५) । **सुट् तिथोः** (पृ० ५) । इति सूत्रे अत्र ग्राह्ये । यास् स् ति इति स्थिते । **लिङाशिषि** । आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् । इति आशीर्लिङः आर्धधातुकत्वात् **लिङः सलोप-** (पृ० ५) इति न प्रवर्तते । किंतु **स्कोः संयोगाद्योरन्ते च** । पदान्ते झलि च परे यः संयोगः तदाद्योः सकारककारयोर्लोपः स्यात् । इति प्रथमं द्वितीयस्य सस्य, ततः प्रथमस्य च लोपः स्यात् । 'याति' इति जाते । **इतश्च** (पृ० ५) इति इकारलोपे रूपम् । १०. तसस्तामादेशे यास् स् ताम् इति जाते **स्कोरिति**— यासुटः



2

९. परस्मैपदे लुङः प्रत्ययाः सप्तविधाः ।

१. तासु प्रथमा—सिचो[२] लोपेन ।

प्र० त्[३] । ताम् । उस्[५] ॥ म० स् । तम् । त ॥ उ० अम् । व । म ॥

२. द्वितीया विधा—च्लेरङादेशेन[६] ।

---

सकारस्य लोपे रूपम् । १. लुङ् । भूतार्थवृत्तेर्धातोर्लुङ् स्यात् । २. च्लि लुङि । लुङि परे धातोः शबादीनां स्थाने 'च्लि' प्रत्ययः स्यात् । च्लेः सिच् । स्था+लुङ्=स्था च्लि लुङ्=स्था सिच् लुङ् । गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । एभ्यः सिचो लुक् स्यात् । गापाविह इणादेशपिबती गृह्येते । दाधाघ्वदाप् । दारूपा धारूपाश्च धातवो 'घु' संज्ञाः स्युः दाप्दैपौ वर्जयित्वा । लुङ्लङ्लृङ्क्ष्वडुदात्तः । एषु परेष्वङ्गस्य अडागमः स्यात्स चोदात्तो ङिच्च । इति धातोरडागमे अ+स्था+त्=अस्थात् । विभाषा घ्राधेट्शाच्छासः । घ्रा धेट् शो छो एभ्यः परस्य सिचो लुग्वा स्यात् । अघ्रासीत् । सिज्लुगभावपक्षे-चतुर्थी विधा । इट्सकौ । ३. इतश्च (पृ० ५)ति 'ति' इत्यस्यान्तलोपः । ४. तस्थस्थमिपा—(पृ० ४) मिति तामादेशः । ५ सिजभ्यस्तविदिभ्यश्च । सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात् । आतः । सिज्लुकि आदन्तादेव झेर्जुस् स्यात् । अस्थुः । आदन्तभिन्नेभ्यस्तु अभूवन् इत्यादि ।

६. अस्यतिवक्तिख्यातिभ्योऽङ् । एभ्यश्च्लेरङ् स्यात् । लिपिसिचिह्वश्च । तथा । पुषादिद्युताद्यॢदितः परस्मैपदेषु । श्यन्विकरणपुषादेः द्युतादेः ऌदितश्च धातोः परस्य च्लेरङ् स्यात्परस्मैपदेषु । सर्तिशास्त्यर्तिभ्यश्च । एभ्यश्च्लेरङ् स्यात् । तथाच-अङादेशार्हा धातवस्तावत्-असु=क्षेपणे । वच=परिभाषणे । ख्या=प्रकथने । लिप=उपदेहे । षिच=क्षरणे । ह्वेञ्=स्पर्धायाम् । दिवादौ पुष=पुष्टावित्यारभ्य गृधु=अभिकाङ्क्षायामित्यन्ताः ६४ धातवः पुषादयः । द्युतादयस्तु-भ्वादौ द्युत=दीप्तावित्यारभ्य कृपू=सामर्थ्ये इत्यन्ताः २३ धातवः । एषां द्युद्भ्यो लुङि । द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । इति पर-

प्र० अत् । अताम् । अन् ॥ म० अस् । अतम् । अत ॥
उ० अम् । अव । अम ॥

३. **लुङि तृतीया विधा**—च्लेश्चङादेशेन ।

प्र० अत् । अताम् । अन् ॥ म० अस् । अतम् । अत ॥
उ० अवम् । अव । अम ॥

४- **लुङि चतुर्थी विधा**—सगादेश इडागमाभ्याम् ।

प्र० सीत् । सिष्टाम् । सिषुः ॥ म० सीः । सिष्टम् । सिष्ट ॥ उ० सिषम् । सिष्व । सिष्म ॥

५. **लुङि पञ्चमी विधा**—क्सादेश इडभावाभ्याम् ।

---

स्मैपदपक्षे अङ् । यथा-अद्युतत् । द्युतादीनामात्मनेपदपक्षे तु-इट् सिच्च । एकादशी विधा । अद्योतिष्ट । लृदितस्तत्र तत्र द्रष्टव्याः । जौहोत्यादी गत्यर्थकौ ऋ सृ धातू शासु=अनुशिष्टौ च । इत्येतेभ्यो नित्यमङ् । **इरितो वा**। इरितो धातोश्लेरङ् वा स्यात् । **जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** । अङ् वा ।

१ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्**। णिजन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । **चङि** । चङि परे अनभ्यासधात्ववयवस्य एकाचः प्रथमस्य द्वे स्तः अजादेस्तु द्वितीयस्य । स्रु=स्रवणे । द्वित्वम् स्रु स्रु । **हलादिः शेषः** (पृ० ७) सुस्रु अडागमः असुस्रु+अत् । **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति उवङ् । असुस्रुव्+अत्=असुस्रुवत् । **विभाषा धेट्श्व्योः** । आभ्यां च्लेश्चङ् वा स्यात् । धेट्=पाने (२६४) अदधत् । चङभावपक्षे प्रथमा विधा अधात् । श्वय-तेस्तु (३२५) द्वितीयाषष्ठ्यावपि विधे । २ **यमरमनमातां सक् च** । एषां सक् स्यात् एभ्यः सिच इट् च परस्मैपदेषु । यथा-अयंसीत् । ३. **शल इगुपधादनिटः क्सः** । इगुपधो यः शलन्तः तस्मादनिटः च्लेः क्सादेशः स्यात् । कुश=

प्र० सत्। सताम्। सन्॥ म० सः। सतम्। सत॥ उ० सम्। साव। साम॥

६. **लुङि षष्ठी विधा**—अनिड्भ्यो धातुभ्यः सिज्लोपाभावेन।

प्र० सीत्। स्ताम्। सुः॥ म० सीः। स्तम्। स्त॥ उ० सम्। स्व। स्म।

७. **लुङि सप्तमी विधा**—सेड्भ्यो धातुभ्यः सिज्लोपाभावेन।

प्र० ईत्। इष्टाम्। इषुः॥ म० ईस्। इष्टम्। इष्ट॥ उ० इषम्। इष्व। इष्म॥

१०. **लृङः प्रत्ययाः**—

प्र० स्यत्। स्यताम्। स्यन्॥ म० स्यः। स्यतम्। स्यत॥ उ० स्यम्। स्याव। स्याम॥

---

आह्वाने रोदने च (२४८) अक्रुक्षत्। १. सिज्लोपः, अङादेशः, चङादेशः सगागमः, क्सादेशः इति पञ्चविधास्वनन्तर्भूतेभ्यः अनिड्भ्यो धातुभ्यः इयं विधा भवति। **वदव्रजहलन्तस्याचः**। वदेर्व्रजेर्हलन्तस्य चाङ्गस्य स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु। डुपचष्=पाके (३१३) अपाक्षीत्। अपाक्ताम्। २. आद्यासु पञ्चसु विधास्वनन्तर्भूताः सेटो धातवोऽस्यां गण्यन्ते। षिधु=गत्याम् (३४) असेधीत्। असेधिष्टाम्। ३. **लिङ्निमित्ते लृङ् क्रियातिपत्तौ**। हेतुहेतुमद्भावादिभाविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। ४. **स्यतासी लृलुटोः**। (पृ० ९) इति स्यः। **इतश्चे** (पृ० ५) ति इकारलोपः। ५. **तस्थस्थमिपा** (पृ० ४) मिति तामादेशः।

